पगतः आर्त्तः, द्रव्यार्त्तः चप्पडिज्जंतः शकटचक्रद्रव्यार्त्तो वा, भावट्टो राग-दोसेहिं । सुट्ठु मूढो सुमूढो, सव्वत्थ वाणियग-दिट्ठंतो वक्तव्यः ।

अजरा-ऽमरवद् बालः क्लिश्यते धनकारणात् । शाश्वतं जीवितं चैव मन्यमानो धनानि च ॥ १ ॥

[ ] ॥ १८ ॥

एतद्धनमुपार्जित्य राज-चौरा-ऽग्नि-दायिकाद्यवशेषं अप्पं वा बहुं वा— 5

**४९०. जधाय वित्तं पसवो य सव्वं, जे बंधवा जे य पिया य मित्ता ।**
**लालप्पती ते वि उवेंति घंतं, अण्णे जणा तं सि हरंति वित्तं ॥ १९ ॥**

४९०. जधाय वित्त पसवो य सव्वं० वृत्तम् । जधाय त्ति त्यक्त्वा । वित्तं धनम् । पशवो गो-महिष्यादयः । बान्धवाः पूर्वापरसम्बद्धाः । मित्राः सहजातकादयः । लालप्पती अत्यर्थं लवति पुनः पुनर्वा लवतीति लालप्यते--हा मातः ! हा पितः ! हा विभवाः ! हा जीवलोक ! "अट्टदुहट्टवसट्टा०" [ ] इत्येवं कुतीर्थिकाः राजादयश्चापि, 10 रूपवानपि कुण्डरीक-पोण्डरीकसरिसो, धनवान् नंदसरिसो, धान्यवान् तिलगसेट्ठिसरिसो । ते वि सव्वे लालप्पयता घंतमुवेंति, घन्तः संसारः, एवं ते यथाकर्मनिष्पन्न उवेंति असमाधिं प्राप्नुवन्ति । यच्च तच्छाश्वतकारित्वेनाजरामरणे च अहन्यहनि उत्पद्यमानेन धनमुपार्जितं तदपि अस्य अन्ये राजादयोऽपहरन्ति । एवं मत्वा पापानि कर्माणि वर्जयेत् तपश्च चरेत् ॥ १९ ॥ कथम् ?—

**४९१. सीहं जधा खुड्डमिया चरंता, दूरेण चरंती परिसंकमाणा ।** 15
**एवं तु मेधावि समिक्ख धम्मं, पावाणि दूरेण विवज्जएज्जा ॥ २० ॥**

४९१. सीहं जधा खुड्डमिया चरंता० वृत्तम् । क्षुद्राः मृगाः क्षुद्रमृगाः व्याघ्र-वृक-द्वीपिकादयः, मृगा रोहितादयश्च । अथवा स एव क्षुद्रमृगः दूरेणेति अदर्शनेनागन्धेन वा तद्देशपरित्यागेन च, अपि वातकम्पितेभ्यस्तृणेभ्योऽपि सिंह-भयादुद्विग्नाश्चरन्ति । एवं तु मेधावि समिक्ख धम्मं, एवं अनेन प्रकारेण, मेधया धावतीति मेधावी, सम्यग् ईक्षित्वा समीक्ष्य ज्ञात्वेत्यर्थः, असमाधिकर्तॄणि च पावाणि दूरेण विवज्जएज्जा ॥ २० ॥ 20

**४९२. संबुज्झमाणे य णरे मतीमं, पावातो अप्पाण णियट्टएज्जा ।**
**हिंसप्पसूताणि दुहाणि मंत्ता, णेवाणभूते व परिव्वएज्जा ॥ २१ ॥**

४९२. संबुज्झमाणो० वृत्तम् । संबुज्झमाणो य, किं संबुज्झमाणो ? समाधिधम्मं । मतिरस्यास्तीति मतिमान् वड्ढमाणपरिणामो हिंसादिपापत आत्मना निवृत्तिं कुर्यात्, निवृत्तेः करणमित्यर्थः । स्यात्—किं पापात् ?, हिंसप्पसूताणि दुहाणि मत्ता, हिंसातः प्रसूतानि हिंसापसूताणि जाति-जरा-मरणा-ऽप्रियसवासादीनि नरकादिदुःखानि च अट्ठविधकम्मोदय- 25 निप्फण्णाणि असमाधि प्रसवतीति । णेव्वाणभूते व परिव्वएज्जा, निर्वाणभूतः सर्वभूतानां निर्वृतिकारणमित्यर्थः, यथा वा निर्वृतोऽव्याबाधसुखप्राप्तस्तिष्ठति एवं भवानपि अव्याबाधसुखनिस्सङ्गो अनिर्वृतोऽपि निर्वृतभूतः सर्वतो व्रजेत् परिव्वएज्जा ॥ २१ ॥ मूलगुणाधिकारे प्रस्तुते—

---

१ जहाहि वित्तं पसवो य सव्वे ख १ ख २ पु १ पु २ वृ० दी० ॥ २ पिया सि मित्ता ख १ ॥ ३ °प्पती से वि य एति मोहं, अण्णे ख १ खं २ पु १ पु २ । °प्पती से वि उवेति मोहं, अण्णे वृ० दी० ॥ ४ रित्थं ख १ ॥ ५ खुद्दमिगा ख १ ख २ पु १ पु २ ॥ ६ दूरे च° ख १ ख २ पु १ पु २ । दूरेण च° वृ० दी० ॥ ७ दूरेण पावं परिवज्जएज्जा ख १ ख २ पु १ पु २ वृ० दी० ॥ ८ तु ख १ ख २ वृ० दी० ॥ ९ निवट्ट° ख १ पु २ ॥ १० मंता, वेराणुबंधीणि महब्भयाणि ख १ खं २ पु १ पु २ वृ० दी० । मंता, णेव्वाणभूते व परिव्वएज्जा वृपा० ॥

**४९३. मुसं ण बूया मुणि अत्तकामी[1], णिव्वाणमेवं[2] कसिणं समाधिं ।
सयं ण कुज्जा ण य[3] कारवेज्जा, करंतमण्णं[4] पि य णाणुजाणे ॥ २२ ॥**

४९३. मुसं ण बूया० वृत्तम् । आत्मनिःश्रेयसकामी । एवं निर्वाणं समाधिर्भवति कसिण इति सम्पूर्णः, संसारिकानि हि यानि कानिचित् स्नान-पानादीनि निर्वाणानि तान्यसम्पूर्णत्वाद् नैकान्तिकानि नात्यन्तिकानि च । वक्तारोऽपि च 5भवन्ति–"णेव्वाणिणिह् लद्धा०" [ ] एवमन्येषामपि व्रतानामतीचार सयं ण कुज्जा ण य कारवेज्जा, करंतमण्णं पि य णाणुजाणे एव योगत्रिककरणत्रिकेण ॥ २२ ॥ इदानीं उत्तरगुणसमाधी—

**४९४. सुद्धेसिया जायण तूसएज्जा[5], अमुच्छितो अणज्झोववण्णो[6] ।
धितिमं विप्पमुक्के[7] ण पूयणट्ठी. ण सिलोयकामी[8] य परिव्वएज्जा ॥ २३ ॥**

४९४. सुद्धेसिया जायण तूसएज्जा० वृत्तम् । सुद्धेसिया जाइओलद्धं एसणिज्जं च, अधवा सुद्धं अलेवकडं, एस-10णिज्जं अहासोहीए हु तूसएज्जा । अमुच्छितो अणज्झोववण्णो गवेषण-गहण-घासेसणासु विइंगाल-वीतधूमं । धितिमं विप्पमुक्के सयमे धृतिमान् अगारबंधणविप्पमुक्के, ण पूआ-सक्कारट्ठी । सिलोगो त्ति जसो, णाण-तवमादीहि सिलोगो ण कामेज्जा ॥ २३ ॥

**४९५. निक्खम्म गेहातो णिरावकंखी, कायं विओसज्ज[9] णिदाणछिण्णे ।
णो जीवितं णो मरणाभिकंखी, चरेज्ज भिक्खू वलया विमुक्के ॥ २४ ॥ त्ति बेमि ॥**

15 **॥ समाही सम्मत्ता ॥ १० ॥**

४९५. निक्खम्म० वृत्तम् । णिक्खम्म गेहातो णिरावकंखी, अप्प वा बहुं वा उपधि विहाय निष्क्रान्तः, मिच्छत्तदोसादीहिं गृह-कलत्र-कामभोगेसु णिरावकंखो । दव्वतो भावतो य कायं विसेसेण उत्सृज्य विओसज्ज । दव्वणिदाणं सयण-धणादि, भावणिदाणं कम्मं । णो जीवितं णो मरणाभिकंखी । वलयं वक्रमित्यर्थः, द्रव्यवलयं शङ्खकः, भाववलयं अष्टप्रकारं कर्म्म येन पुनः पुनर्वलति संसारे । वलयशब्दो हि वक्रताया भवति गतौ च । वक्रतायां यथा—वलितस्तन्तुः, 20वलिता रज्जुरित्यादि । गतौ च—वलति वार्त्ता, वलति सार्थ इत्यादि । वलयविमुक्त इति कर्मबन्धनविमुक्तः । अथवा वलय इति माया तया च मुक्तः । एवं क्रोधादिमाणविमुक्त इति ॥ २४ ॥

**॥ दशममध्ययनं समाप्तम् ॥ १० ॥**

---

१ **अत्तगामी** ख २ पु १ पु २ वृ० दी० । **यऽत्तगामी** ख १ ॥ २ **°णमेयं** ख १ ख २ पु १ पु २ वृ० दी० ॥ ३ **वि** ख १ ॥ ४ **करेंत°** ख १ ख २ पु १ ॥ ५ **सुद्धे सिया जाए ण दूसएज्जा** ख १ ख २ पु १ पु २ वृ० दी० ॥ ६ **ण य अज्झो°** ख १ ख २ पु १ पु २ दी० । **अणज्झो°** वृ० ॥ ७ **विमुक्के ण य पू°** ख १ ख २ पु १ पु २ वृ० दी० ॥ ८ **°यगामी** ख २ पु १ पु २ वृ० दी० ॥ ९ **विओसेज्ज** ख १ ख २ पु १ पु २ ॥

# ११

## [ एक्कारसमं मग्गज्झयणं ]

**मग्गो** त्ति अज्झयणस्स चत्तारि अणुयोगदाराणि । अधियारो मग्गपरूवणाए पसत्थभावमग्गाऽऽयरणयाए य । णामणिप्फण्णे मग्गो ।

णामं ठवणा दविए खेत्ते काले तहेव भावे य ।
एसो खलु मग्गस्सा णिक्खेवो छव्विधो होति ॥ १ ॥ १०० ॥ 5

**णामं ठवणा दविए०** गाहा ॥ १ ॥ १०० ॥ वतिरित्तो दव्वमग्गो अणेगविधो—

फलग-लतंदोलग[1]-वेत्त-रज्जु-दवण-बिल-पासमग्गे[2] य ।
खीलग-अय-पक्खिपहे छत्त-जला-ऽऽकास दव्वम्मि ॥ २ ॥ १०१ ॥

**फलगलताअंदोलग०** गाधा । **फलगेहिं** जहा दद्दरसोमाणेहिं, जधा फलगेण गम्मति वियरगादिसु, चिक्खल्ले वा 10
जधा । **वेत्तलताहिं गंगमादी** सतरति, जधा **चारुदत्तो वेत्तवतिं**[3] वेत्तेहिं ओलंबिऊण परकूलवेत्तेहिं आलाविऊण उत्तिण्णो

---

१ °लयंदोलण-वित्त° ख १ खं २ पु २ चू० ॥ २ °**मग्गणया** ख १ ॥ ३ **वसुदेवहिण्डौ 'उसुवेगा'** नाम दृश्यते । अत्र **मार्ग**ज्ञानायात्यन्तोपयोगी **वसुदेवहिण्डिपाठ फलग०** निर्युक्तिगाथावृत्तिश्च क्रमश उद्ध्रियेते–"कमेण उत्तिण्णा मो **सिंधुसागरसंगमं** नदिं । वच्चामो उत्तरपुव्व दिस भयमाणा । अतिच्छिया **हूण-खस-चीण**भूमीओ । पत्ता मो **वेअड्ढ**पाय **संकुपहं** । ठिया सत्थिया, कओ पागो, वणफलाणि य भक्खियाणि । भुत्तभोयणेहि य कोट्टिय तुंबरुचुण्णं सत्थिगेहिं । भणिया पुरंगमेण–चुण्णं परिगेण्हह, परिकरेण बंधह चुण्णस्स उच्चोलीओ, भरेह भडं पोट्टलए, कक्खपएसे बंधह, ततो एतं छिण्णटंकं कडयं **विजयाणदिं** दहं अत्थग्घमेगद्देसे सकुलयालंबणं **संकुपहं** कमिस्सामो, जाहे हत्था पसिज्जति ताहे तुंबरु परामुसिज्जह, ततो फरुसयाए हत्थाण अवलंबण होइ, अण्णहा उवलसंकूओ नीसरिय निरालंबणस्स छिण्णदहे पडण-मपारे भविज त्ति । ततो तस्स वयणेण तुंबरुचुण्णाइगहणपुव्व सव्व कय । उत्तिण्णा मो सव्वे **संकुपहं** । पत्ता मो जणवय । ततो पत्ता मो **उसुवे-गनदिं**, तत्थ ठिया, पक्काणि वणफलाणि आहारियाणि । ततो पुरगमेण भणिय–एसा नदी **वेयड्ढ**पव्वयपवहा **उसुवेगा** अत्थग्घा, जो उत्तरेज्ज सो उसुवेगगामिणा जलेण हीरिज्ज, न तीरए तिरिच्छ पविसिउं ति, एस पुण पहो गम्मइ **वेत्तलयागुणेण**–जया उत्तरो वाऊ वायइ ततो पव्वयतरविणिग्गयस्स मारुयस्स एगसमूहयाए महता गोपुच्छसंठिया सभावओ मिउ-थिरा वेत्ता दाहिणेण णामिज्जंति, 'नामेज्जमाणा **उसुवेग**नदीए दक्खिणकूलं सपावेंति' त्ति अवलंबिज्जंति, अचलविएतु वेलुयपव्वाउदरा छुब्भति, ततो जओ दाहिणो वाऊ अणुयत्तो भवइ ततो सो उत्तर सछुभइ, 'सछुब्भमाणेसु वेलुपव्व-सरणेसु पुरिसो उत्तरे कूले छुब्भइ' त्ति गेण्हह वेलुपव्वे, मारुय पडिवालेह त्ति । तस्स मएण गहिया वेलुयपव्वाउदरिया, बद्ध भड परिकरा य । मारुय पडिवालेंता जहोपदेस दक्खिणवाउविच्छूटवेत्तवंमोवतरणेण ठिया मो उत्तरकूले । वेत्तलयागुविलं च पव्वयकडगं सोहयता मग्गं अइच्छिया, गया **टंकणदेसं** । पत्ता मो गिरिनदीतीरं, सीमंतम्मि संठिओ सत्थो । भुत्तभोयणेहिं पुरगमवयणेण नदीतीरे पिहप्पिहं विरइयाणि भडाणि, एगो य कट्ठरासी पलीविओ, अवक्कता य मो एगत । अग्गिं सधूम दट्ठूण **टंकणा** आगया, पडिवण्ण भड, तेहिं पि कओ धूमो, ते गया पुरगमवयणेण णियगट्ठाणे । निवद्धा छगला फलाणि य गहियाणि सत्थिएहिं । तओ पत्थिओ सत्थो **सीमानदी**तीरेण । पत्ता य मो **अयपहं** । वीसता कयाहारा पुरंगमवयणेण अच्छीणि वधिऊण छगलमारुढा **वज्जकोडीसंठियं** पव्वय उभओपासछिण्णकडय अइक्कता । सीयमारुयाहयसरीरा सठिया छगलगा, मुक्काणि अच्छीणि, वीसता भूमिभाए । कयाहारा य भणिया पुरगमेण–मारेह छगले, चम्मब्भत्थे सरुहिरे ठवेह, अयमंसं पइत्ता भक्खेह, वद्धकडिच्छुरिया भत्थगेसु पवि सह, तओ **रयणदीवाओ भारुंडा** नाम **सउणा** महासरीरा इहाऽऽगच्छति चरिउं, ते इह वग्ध-ऽच्छभल्लहयाणं सत्ताणं मंसाइं खायंति, महंत मंसपेसी निलयं नयंति, ते वो सरुहिरभत्थगपविट्ठे 'मंसपेसि' त्ति करिय उक्खिविय णइस्सति **रयणदीवं**, निक्खित्तमेत्तेहि य भत्थया फालेयव्वा छुरियाहिं, तओ रयणसगहो कायव्वो । एस **रयणदीवगमणस्स** उवातो त्ति ।" इति [ पत्र १४८-४९ ] । अथात्र **वृत्तिपाठ –"फलगे**त्यादि । फलकैर्मार्गो **फलकमार्गः**, यत्र कर्दमादिभयात् फलकैर्गम्यते । **लतामार्गस्तु** यत्र लतावलम्बेन गम्यते । **अन्दोलनमार्गो**ऽपि यत्र अन्दोलनेन दुर्गमतिलङ्घ्यते । **वेत्रमार्गो** यत्र वेत्रलतोपष्टम्भेन जलादौ गम्यत इति, तद्यथा–**चारुदत्तो** वेत्रलतोपष्टम्भेन **वेत्रवतीं** नदीमुत्तीर्य परकूलं गत । **रज्जुमार्गस्तु** यत्र रज्ज्वा किञ्चिदतिदुर्गमतिलङ्घ्यते । 'दवनं' यानम्, तन्मार्गो **दवनमार्गः । विलमार्गो** यत्र गुहाद्याकारेण बिलेन गम्यते । पाशप्रधानो मार्ग **पाशमार्ग**, पाश-कूटक-वागुरान्वितो मार्ग इत्यर्थ । **कीलकमार्गो** यत्र वालुकोत्कटे **मरुका**दिविषये कीलकाभिज्ञानेन गम्यते । **अजमार्गो** यत्र अजेन–बस्तेन गम्यते, तद्यथा–**सुवर्णभूम्यां चारुदत्तो** गत इति । **पक्षिमार्गो** यत्र भारुण्डादिपक्षिभिर्देशान्तरमवाप्यते । **छत्रमार्गो** यत्र छत्रमन्तरेण गन्तुं न शक्यते । **जलमार्गो** यत्र नावादिना गम्यते । **आकाशमार्गो** विद्याधरादीनाम्" इति ॥

[ वसु० प्र० ख० लं० ३ पत्र १४८ ]। **अंदोलएण** अंदोलारूढो एति य, जं वा रुक्खसालं अंदोलिएऊणं अप्पाणं परतो वच्चति। जधा लता तधा **वेत्ते** वि। अधवा **लत** त्ति आकंपिऊणं अण्णाए लताए लग्गति। **रज्जुहि गंगं** उत्तरति। **[ दवणं ]** दगणदीजायणं (?जाणं)। **विलं** दीवगेहिं पविसंति। **रज्जुं** वा कडिए बंधिऊण पच्छा रज्जुं अणुसरंति क्वचिद् रसकूपिकादौ महत्त्यन्धकारे, पुणो णिग्गच्छति गच्छति सो चेव **पासमग्गो**। **खीलगेहिं** रुमाविसए वालुगाभूमीए चक्कमंति, क्वचिद् 5 वेणु(?रेणु)प्रचुरे देशे कीलिकानुसारेण गम्यते, अन्यथा पथभ्रंशः। **अयपधो** लोहबद्धः **सुवण्णभूमीए** पच्छा (? वच्छा वा)। **पक्खीणं** ति जधा **चारुदत्तो** णातो [ वसु० प्र० खं० लं० ३ पत्र १४९ ]। **छत्तगमग्गो** छत्तगेणं धरिज्जमाणेणं गच्छति उपद्रवभयात्, जधा **गणिगो** पवातो। **जलमग्गो** णावाहिं। **आगासमग्गो** चारण-विज्जाहराणं ॥ २ ॥ १०१ ॥

**खेत्तम्मि जम्मि खेत्ते काले कालो जहिं[2] वहति मग्गो।**
**भावम्मि होति दुविधो पसत्थ तह अप्पसत्थो य ॥ ३ ॥ १०२ ॥**

10 **खेत्तम्मि जम्मि खेत्ते०** गाधा। **जम्मि खेत्ते** मग्गो—भूमिगोअराणं भूमीए मग्गो, देवाणं आगासे, खेचर-विज्जाहराणं उभये। अधवा खेत्तस्स मग्गो, जधा सा[लि][3]खेत्तमग्गो एवमादि, ग्राममार्गो नगरमार्ग इत्यादि, यथा—एष पन्था **विदर्भायाः**, अयं गच्छति **हस्तिनागपुरम्**। कालमार्गो जो जम्मि काले मग्गो वहति, यथा—वर्षारात्रे उदगपूर्णानि सरांसि परिरयेण गम्यन्ते, व्याशुष्ककर्दमानि शिशिरे ग्रीष्मे वा उज्जुमग्गेण। यस्मिन् वा काले गम्यते, यथा—ग्रीष्मे रात्रौ सुखं गम्यते, हेमन्तेऽहनि। जच्चिरेण वा गम्मति, यथा योजनिकी सन्ध्या। भावमग्गो दुविधो पसत्थो अप्पसत्थो य ॥ ३ ॥ १०२ ॥

15 **दुविहम्मि वि तिगभेदो णेओ तस्स वि विणिच्छओ दुविहो।**
**सुगतिफल दुग्गतिफलो पगतं सुगतीफलेणेत्थं ॥ ४ ॥ १०३ ॥**

**दुविहम्मि वि तिगभेदो०** गाधा। अप्पसत्थभावमग्गो तिविधो, तं जधा—मिच्छत्तं १ अविरती २ अण्णाणं ३। पसत्थभावमग्गो तिविहो, तं जधा—[ सम्मण्णाणं ] सम्मदंसणं सम्मचारित्तं। **तस्स** पुण दुविहस्सावि मग्गस्स **दुविहो विणिच्छयो,** **विनिश्चयः** फलं कार्यं निष्ठेत्यनर्थान्तरम्। पसत्थो **सुगतिफलो,** अप्पसत्थो **दुग्गतिफलो**। **सुगतिफलेना-** 20 धिकारः ॥ ४ ॥ १०३ ॥ अप्पसत्थमग्गट्ठिताणं पुण दुग्गतिगामुगाणं—

**दुग्गतिफलवातीणं[4] तिण्णि तिसट्ठा सता पवादीणं।**
**खेमे य खेमरूवे चउक्कगं मग्गमादीसु ॥ ५ ॥ १०४ ॥**

**दुग्गतिफलवातीणं०**। **तिण्णि तिसट्ठा पावादियसता**। दव्वमग्गो पुण चतुव्विधो—खेमे णामेगे क्खेमरूवे, खेमे णामेगे अक्खेमरूवे० ट्ठ[5]। **खेमे य खेमरूवे** त्ति अदुग्गं णिच्चोरं च, एवं चतुसु वि भंगेसु योजयितव्यम्। भावमग्गो एवमेव 25 चतुभंगो—पढमभंगे भाव-दव्वलिंगजुत्तो साधू १ खेमे अक्खेमरूवे कारणिओ दव्वलिंगरहितो साधू २ अक्खेमा खेमरूविगा णिण्हगा ३ अण्णउत्थियगिहत्था चरिमभंगे ४ ॥ ५ ॥ १०४ ॥

**सम्मप्पणीत मग्गो णाणं[6] तध दंसणं चरित्तं च।**
**चरग-परिव्वायादीचिण्णो मिच्छत्तमग्गो त्ति[7] ॥ ६ ॥ १०५ ॥**

**सम्मप्पणीत मग्गो०** गाधा। जो सो पसत्थभावमग्गो सो तिविधो—**णाणं तध दंसणं चरित्तं च**, तित्थगर-गणधरेहिं 30 थेरेहिं साधूहि य अणुचिण्णो। तव्विवरीओ पुण मिच्छत्तमग्गो, सो **चरग-परिव्वायगादीहिं आचिण्णो मिच्छत्तमग्गो** ॥६॥ १०५ ॥ येऽपि सच्छासनप्रतिपन्नाः—

**इड्ढि-रस-सातगुरुगा[8] छज्जीवणिकायघातणरता य।**
**जे उवदिसंति[9] धम्मं कुमग्गमण्णस्सिता जाण ॥ ७ ॥ १०६ ॥**

---

१ कीलिका° वा० मो० ॥ २ जहिं भवे मग्गो ख १। जहिं हवइ जो उ ख २ पु २ ॥ ३ रेवत्त° पु०। "शालिक्षेत्रादिके वा क्षेत्रे" इति वृत्तौ ॥ ४ दोग्गति° ख २ पु २ ॥ ५ ट्ठ इति चतुर्महत्याद्योतकोऽक्षराङ्क ॥ ६ णाणे तह दंसणे चरित्ते य ख १ ख २ पु २ ॥ ७ उ ख १ ॥ ८ °गरुया ख १ खं २ पु २ ॥ ९ °संति मग्गं कुमग्गमग्गस्सिता ते उ ख १ ख २ पु २ वृ० ॥

इड्ढि-रस-सातगुरुगा० गाधा । इड्ढि-रस-[ सात ]गारवेहिं वा धम्मं उवदिसंति ते वि ताव कुमग्गमणस्सिता, किमंग पुण परउत्थिगा तिगारवगुरुगा छज्जीवकायवधरता जे उवदिसंति धम्मं संघभत्ताणि करेमाणा ?, एवमादि कुमग्गमणस्सिता जाण ॥ ७ ॥ १०६ ॥ जे पुण—

तव-संयमप्पहाणा गुणधारी जे वदंति सब्भावं ।
सव्वजगज्जीवहितं तमाहु सम्मप्पणीत[1]मवि ॥ ८ ॥ १०७ ॥

तव-संयमप्पहाणा० गाधा । सीलगुणधारी जे वदंति सब्भावं णाम जधावादी तधाकारी । सव्वजगज्जीवहितं यं तमाहु सम्मप्पणीतमवि ॥ ८ ॥ १०७ ॥ तस्स पुण एगट्ठियाणि णामाणि भवंति, तं जधा—

[2]पंथो णायो मग्गो विधी धिती सोग्गती हित सुहं च ।
पत्थं सेयं णेव्वुइ णेव्वाणं सिवकरं चेव ॥ ९ ॥ १०८ ॥

॥ म[3]ग्गणिज्जुत्ती सम्मत्ता ॥ ११ ॥

पंथो णायो मग्गो० गाधा ॥ ९ ॥ १०८ ॥ णामणिप्फण्णो गतो । सुत्ताणुगमे सुत्तमुच्चारेतव्वं । अज्जसुधम्मं जंबू पुच्छति—

४९६. [4]कतरे मग्गे [5]आघाते माहणेण मतीमता ? ।
जं मग्गं [6]अंजु पावित्ता ओहं नरति दु[7]रुत्तरं ॥ १ ॥

४९६. कतरे मग्गे आघाते० सिलोगो । आघाते इति आख्यातः । [ माहणे त्ति वा ] समणे त्ति वा एगट्ठं, भगवानेवापदिश्यते । मतिरस्यास्तीति मतिमान् तेन मतिमता । जं मग्गं उज्जु ( ? अंजु ) पावित्ता, अंजुः इति अकुटिलः । अथवा कतरे इति कतरो भावमार्गः पसत्थो आख्यातः माहणेण मतीमता ? तत्र [ न ] तावद् द्रव्यमार्गो वा अप्रशस्तभावमार्गो वा तेनाऽऽख्यातः, अवश्यं तु प्रशस्तभावमार्गः पसत्थो आख्यातः, किं ते हितेण दिट्ठो उज्जुगो य ? तं मे अक्खाहि जं मग्गं उज्जु ( ? अंजु ) पवजित्ता ओघो द्रव्यौघः समुद्रः, भावे संसारौघं तरति ॥ १ ॥

४९७. तं [8]मग्गं अणुत्तरं सुद्धं सव्वदुक्खविमो[9]क्खणं ।
[10]जाणेहि णं जधा भिक्खू ! तं णे[11] ब्रूहि महामुणी ! ॥ २ ॥

४९७. तं मग्गं अणुत्तर सुद्धं० सिलोगो । तमिति तम् ओघतरं महापोतभूतम् । [ अणुत्तरं ] नास्योत्तरा अन्ये कुमार्गाः शाक्यादयः । शुद्ध इति एक एव, निरुपहतत्वाच्चैवम्, अथवा पूर्वापरव्याहतबाध्यदोषापगमात् शुद्धः । सव्वदुक्खविमोक्खणं, अन्येऽपि ग्रामादिमार्गाश्चौर-श्वापदभयोपद्रुता दुःखावहा भवन्ति, भूत्वा च न भवन्ति, उदकाद्युपप्लवैः अप्रशस्ते, भावमार्गाः अपि दुःखावहा एव ते, सम्यग्दर्शन-ज्ञान-तपोमयस्तु प्रशस्तभावमार्गः शुद्धः सर्वदुःखविमोक्षणम् । तमेवंविधं जाणेहि णं जधा भिक्खू, यथेति येन प्रकारेण, भिक्षुरिति भगवानेव । यथा स भिक्षुर्ज्ञातवान् तथाभूतं त्वमपि जानीषे तमेवं जानीते । अथवा हे भिक्षो ! तमेवं ब्रूहि महामुणी ! हे महामुने ! ॥ २ ॥

स्यात्—किमर्थमहं पृच्छामि ? तत उच्यते—

४९८. जइ [12]मे केइ पुच्छेज्ज देवा अदुव माणुसा ।
तेसिं तु कतरं मग्गं आइक्खेज्ज ? कहाहि [13]णे ॥ ३ ॥

४९८. जइ मे केइ पुच्छेज्ज० सिलोगो । देवाश्चतुष्प्रकाराः एते पृच्छाक्षमा भवन्ति, तिरिया मणुस्सा ( ? मणुस्सा तिरिया वा ), उत्तरगुणलद्धिं वा पडुच्च तियं ( ? तिरियं ) अपि कश्चिद् गिरा वत्ति( ? क्ति ), वयसा वि पुच्छेज्ज, तेसिं तु

---

१ °तमिणं ख १ ख २ पु २ ॥ २ पंथो मग्गो णायो ख १ ख २ पु २ वृ० ॥ ३ मग्गो सम्मत्तो ख २ पु २ ॥ ४ कतरे णं चूपा० सूत्र ५३३ चूर्णौ ॥ ५ अक्खाते मा° खं १ ख २ पु १ पु २ ॥ ६ उज्जु ख १ ख २ पु १ पु २ ॥ ७ दुत्तरं ख १ ॥ ८ मग्गऽणुत्तरं ख १ ॥ ९ °क्खगं ख २ पु १ पु २ ॥ १० जाणासि णं ख २ पु १ पु २ वृ० दी० । जाणासि तं खं १ ॥ ११ ने ख १ ख २ । मे पु १ ॥ १२ णे ख १ ख २ पु २ । णो पु १ वृ० दी० ॥ १३ णो ख २ पु १ पु २ वृ० दी० ॥

कतरं मग्गं, तेषाम् अजानकानां स्वयमजानकः कतरं मार्गं कथं वा कथयिष्यामि ? । अव्याबाधसुखादीनि आवहतीति सुखावहः, अथवाऽभ्युदयकं निःश्रेयसं च ॥ ३ ॥

इति पृष्ट आर्यसुधर्मा जम्बूस्वाम्याद्यान् साधून् प्रणिधाय सदेव-मणुआ-ऽऽसुरं च परिसं णिस्साए करेति—

**४९९. जइ वो केइ पुच्छेज्ज देवा अदुव माणुसा ।**
**[1]तेसिं तु इमं मग्गं आइक्खेज्ज सुणेध मे ॥ ४ ॥**

४९९. जइ वो केइ० वृत्तम् ( सिलोगो ) । जइ वो केइ पुच्छेज्ज, जति त्ति अणिद्दिट्ठणिद्देसे, संसारभ्रान्तिनिर्विण्णाः देवा अदुव माणुसा । तेसिं तु इमं मग्गं आइक्खेज्ज सुणेध मे । पठ्यते च–"तेसिं तु पडिसाहेज्ज मग्गसारं सुणेह मे, साहितं प्रति अन्येषां साहन्ति, कथितं सत् पडिसाहेज्जा । मार्गाणां सारः मार्ग एव वा सारः मार्गसारः ॥ ४ ॥

**५००. अणुपुव्वेण महाघोरं कासवेण पवेदितं ।**
**जमादाय इतो पुव्वं [2]समुद्दं व ववहारिणो ॥ ५ ॥**

५००. अणुपुव्वेण० सिलोगो । कथं मार्गप्रतिपत्तिरेव तावद् भवति ?, उच्यते, अणुपुव्वेण महाघोरं, अणुपुव्वेणं ति "माणुस्स खेत्त जाती०" [ आव० नि० गा० ८३१ ] गाथा, अथवा "चत्तारि परमंगाणि०" [ उत्तरा० अ० ३ गा० १ ] सिलोगो, अथवा "पढमिल्लुगाण उदये०" गाधाओ तिण्णि [ आव० नि० गा० १०८–१० ], एवं कम्मक्खयाणुपुव्विगाधा जाव "बारसविधे०" [ आव० नि० गा० १११–१३ ] । दुरनुचरत्वाद् महाघोरः, अणुपुम्भिः दुस्तरम, महापुरुषास्तु घोरमपि तरन्ति, घोरसङ्ग्रामप्रवेशवत् । कासवेण पवेदितं, प्रदर्शितमित्यर्थः । जमादाय इतो पुव्वं, जं आदाय इति यमनुचरित्वा इत इति इतस्तीर्थादर्थं ( ? र्थात् पूर्वं ) अद्यतनाद्वा दिवसादिति । समुद्रेण तुल्यं समुद्रवत्, व्यवहरन्तीति व्यवहारिणः वणिजः ॥ ५ ॥

यथा तेऽतिक्रान्ते काले समुद्रम्—

**५०१. अतरिंसु तरंतेगे तरिस्संति अणागता ।**
**तं सोच्चा पडिवक्खामि जंतवो ! तं सुणेह मे ॥ ६ ॥**

५०१. अतरिंसु० सिलोगो । अतरिष्यन् तरन्ति तरिष्यन्ति च, तद्वत् सम्यग्मार्गमनुचर्य तीतद्धाए अणंता जीवा संसारोघमतरिंसु, सङ्ख्येयाः तरन्ति साम्प्रतम्, अणंता तरिस्संतऽणागतं ति । तं सोच्चा तमहं श्रुत्वा भवदादीन् श्रोतॄन् प्रतिवक्ष्यामि । जायन्त इति जन्तवः, जम्बूस्वाम्यादीनां आमन्त्रणम्, हे जन्तवः ! तं सुणेह मे चरित्तमग्गं आइक्खिस्सामि । तदन्तमार्गावपि तदन्तर्गतावेव जेसु संजमिज्जति ॥ ६ ॥ ते इमे, तं जधा—

**५०२. पुढवीजीवा पुढो सत्ता आउजीवा तधाऽगणी ।**
**वाउजीवा पुढो सत्ता तण-[3]रुक्खा सबीयगा ॥ ७ ॥**

५०२. पुढवीजीवा पुढो सत्ता० सिलोगो । पृथक् पृथग् इति प्रत्येकशरीरत्वात् । आउजीवा तधाऽगणी, पुढो सत्ता इति वर्त्तते । तण-रुक्खग्गहणेण भेदो दरिसितो ॥ ७ ॥

**५०३. [4]अहावरे तसा पाणा एवं छक्काय आहिया ।**
**[5]एताव ता जीवकाए [6]णावरे विज्जती [7]कए ॥ ८ ॥**

५०३. अहावरे० सिलोगो । अथावरे तसा पाणा एवं छक्काय आहिया । एताव ता जीवकाये न हि सप्तमो विद्यते जीवकायः ॥ ८ ॥ एते—

---

१ तेसिमं पडिसाहेज्जा मग्गसारं सुणेह मे ख १ ख २ पु १ पु २ वृ० दी० चूपा० । तेसिं तु पडि° चूपा० । सुणेहि खं २ पु २ । तेसिं तु इमं मग्गं आइक्खेज्ज सुणेह मे वृपा० ॥ २ समुद्दं वव° ख २ पु १ पु २ वृ० दी० ॥ ३ °रुक्ख खं १ ख २ पु १ पु २ ॥ ४ अहावरा ख २ पु २ ॥ ५ इत्ताव एव जीव° ख २ पु २ वृ० दी० । इत्ताव ताव जीव° ख १ । इत्तायये जीव° पु १ ॥ ६ णावरे कोइ विज्जती मा० ॥ ७ कती ख १ ख २ । काए पु १ पु २ ॥

**५०४. सव्वाहिं अणुजुत्तीहिं मतिमं पडिलेहिया ।**
**सव्वे अकंतदुक्खा य अतो सव्वे अहिंसका ॥ ९ ॥**

**५०४. सव्वाहिं अणुजुत्तीहिं०** सिलोगो । अनुरूपा युक्तिः अनुयुक्तिः । जधा—

पुढवीए णिक्खेवो परूवणा लक्खणं परीमाणं । उवभोए सत्थे वेदणा य चवणा ( वधणा ) णियत्ती य ॥ १ ॥

[ आचा० नि० गा० ६८ ] 5

☞ किञ्चे—अङ्कुरवद् जीवत्वं पार्थिवानाम्, विद्रुम-लवणोपलादयश्च स्वाश्रयावस्थाः सचेतनाः, कुतः ?, समानजातीयाङ्कुरसद्भावात्, अर्शोविकाराङ्कुरवत् ।

भूमिक्खयसाभावियसंभवतो दद्दुरो व्व जलमुत्तं । अधवा मच्छो व्व सभाववोमसंभूतपातातो ॥ १ ॥

[ विशेषा० गा० १७५७ ]

सात्मकं तोयं भौमम्, कुतः ?, समानजातीयस्वभावसम्भवात्, दर्दुरवत्, अथवा अन्तरीक्षम्[3], अभ्रादिविकारस्वभाव-10 सम्भूतपातात्, मत्स्यवत् । ग्रहणकवाक्यम्—इन्धनसंयोगात् तेजसा तेजः सात्मकम्, आहारोपादानात् तद्वृद्धिविशेषोपलब्धेः तद्विकारदर्शनाच्च, पुरुषवत् । ग्रहणकवाक्यम्—गतिमत्त्वाद् वायुर्जीवः, प्रयत्नगतेः, यस्मादयं सविक्रम इव पुमान् तीव्र-मन्द-मध्यान् गतिविशेषान् स्वेन महिम्ना श्रयतीति, वेगवत्त्वाच्च वृक्षादीनुन्मूलयति इत्यतो गतिमत्त्वाद् वायुर्जीवः । सात्मकाः वनस्पतयः, जन्म-जरा-जीवण-मरणसद्भावात्, स्त्रीवत् । आह—नन्वयमनैकान्तिकः, जाताख्याः ( द्याः ) विपक्षेऽपि[4] दर्शनात्, तद्यथा—जातं दधि, जीर्णं वासः, सञ्जीवितं विषम्, मृतं कुसुम्भकमित्यादि, उच्यते, न, वनस्पतौ समस्तलिङ्गोपलब्धेः, दध्यादावसमस्तदर्शनादुपचारतः जातमिति ( जातादीनि ) । इतश्च सात्मका वनस्पतयः, क्षतसंरोहणाद् आहारोपा-15 दानाद् दौहृदसद्भावाद् [ आमयसद्भावाद् ] रोगचिकित्सासद्भावात् । दौहृदादौ सम्भवतः कुष्माण्ड्यादीनां[5] 'विशेषपक्षः' विशेषश्चासौ पक्षश्च विशेषपक्षः कर्त्तव्यः ॥

छिक्कप्परोइता छिक्कमेत्तसंकोअतो कुलिंगो व्व । आसयसंचारातो जाणसु वल्ली-विताणाइं ॥ १ ॥

[ विशेषा० गा० १७५४ ]

सात्मकाः स्पृष्टप्ररोदिकादयः, स्पृष्टाकुञ्चनात्, कीटवत्, आश्रयाभिसर्पणाद् वल्यादयः । 20

सम्मादयो य साव-प्पबोह-संकोयणादितोऽभिमता । वउलादयो य सद्दादिविसयकालोवलम्भातो ॥ १ ॥

[ विशेषा० गा० १७५५ ]

[सात्मकाः] शम्यादय, स्वाप-प्रबोध-सङ्कोचनादिसद्भावात्, शब्दादिविषयोपलम्भाद् वकुला-ऽशोकादयः, देवदत्तवत् । ☜

एवमाद्याभिस्त्रसानुरूपाभिः **अनुयुक्तिभिः** एगिंदिए **पडिलेहिया** जवेति, जीवातिहिंसोपरतिः कार्या स्वकामतः । अब्भोवगमिओवक्कमियाओ वेदणाओ भाणितव्वाओ । तत्थ मणुस्स-पचेंदियतिरियाण य दुविधा, सेसाणं ओवक्कमिया । एवं 25 **मतिमं पडिलेहेत्ता सव्वे अकंतदुक्खा य**, सारीरं माणस वा सव्वेसि अणिट्ठं अकंत अपियं दुक्खं, **अत** इत्यस्मात् कारणाद् नवकेन भेदेन अहिंसणीया **अहिंसकाः** ॥ ९ ॥

---

१ ण **हिंसया** ख २ पु १ पु २ वृ० दी० । **अहिंसगा** ख १ ॥ २ हस्तचिह्नान्तर्गतश्चूर्णिग्रन्थसन्दर्भ समग्रोऽपि प्रायो विशेषावश्यकमहाभाष्यगत "जम्म-जरा-जीवण-मरण०" १७५३ गाथात "अपरप्पेरिय०" १७५८ पर्यन्तगाथाना स्वोपज्ञटीकारूप एव वर्तते ॥ ३ °**रीक्षमानभ्रा**° पु० स० । °**रीक्ष्यमानभ्रा**° वा० मो० । °**रीक्षेमभ्रा**° विखो० । "सात्मक भौम जलम्, क्षतसमानजातीयस्वभावसम्भवात्, दर्दुरवत् । अथवा अन्तरिक्षम्, अभ्रादिविकारस्वभावसम्भूतपातात्, मत्स्यवत् ।" इति **कोट्याचार्यीयवृत्तौ** पत्र ५४६ ॥ ४ °**कः विपक्षेऽपि** विखो० । "आह—सर्वेऽनैकान्तिकाः, विपक्षेऽपि दर्शनात् । तद्यथा—जात दधि अचेतन च, एव जीर्णं वास, सञ्जीवितं विषम्, मृत कुसुम्भकमित्यादि" इति **कोट्याचार्यवृत्तौ** ॥ ५ °**ण्ड्यादीन् विशेष्य पक्षः कर्त्तव्यः** विखो० ॥

**५०५. एतं खु णाणिणो सारं जं ण हिंसति [1]कंचणं।**
**अहिंसासमयं चेव [2]एतावंतं विजाणिया ॥ १० ॥**

**५०५. एतं खु णाणिणो सारं०** सिलोगो। न हि ज्ञानी ज्ञानादर्थान्तरभूत इति कृत्वाऽपदिश्यते—**एतं खु णाणिणो सारं** ति, कोऽर्थः ?, एष हि ज्ञानस्य सारः। **जं ण हिंसति कंचणं,** कञ्चणमिति क्वचि(?कञ्चि)दपि नवकेन भेदेन। **अहिंसासमयं** ति, समता "जध मम ण पियं दुक्खं०" गाधा [ अनुयो० पत्र २५६ ] अथवा यथा हिंसितस्य दुःखमुत्पद्यते मम, एवमभ्याख्यातस्यापि चोरियातो वाऽस्य दुःखमुत्पद्यते, एवमन्येषामपि इत्यतो **अहिंसासमयं चेव**। अधवा दव्वतो खेत्ततो कालतो भावतो हिंसा भवति, एवं शेषाण्यपि, एतावांश्चैष ज्ञानविषयः यदुत हिंसाद्याश्रवद्वारोपरतिः ॥ १० ॥

क्षेत्रप्राणातिपातं तु प्रतीत्यापदिश्यते—

**५०६. [3]उड्ढमहं तिरियं च जे केति तस-थावरा।**
**सव्वत्थ [4]विरतिं [5]कुज्जा संति णिव्वाणमाहियं ॥ ११ ॥**

**५०६. उड्ढमहं तिरियं च०** सिलोगो। प्रज्ञापकं प्रतीत्य उड्ढं अधं **तिरियं च** पूर्ववत्। **सव्वत्थ विरतिं कुज्जा** इहापि तावद् निर्वाणं भवति। कथम् ?, अहिंसको हि न हि हिंसक इव सर्वस्योद्वेजको भवति, उपशान्तवैरत्वाच्च न कस्यचिदपि बिभेति। किञ्च—"तणसंथारणिवण्णो वि मुणिवरो भट्ठराग-मय-दोसो।" [ सत्थारकप्र० गा० ४८ ] किमु मोक्खो ?, एवं निर्वाणं भवतीत्याख्यातम् ॥ ११ ॥

**५०७. पभू दोसे [6]णिरे किच्चा ण विरुज्झेज्ज केणइ।**
**मणसा वयसा चेव कायसा चेव अंतसो ॥ १२ ॥**

**५०७. पभू दोसे णिरे किच्चा०** सिलोगो। पभवतीति प्रभुः, वश्येन्द्रिय इत्यर्थः, न वा संयमावरणानां कर्मणां वशे वर्त्तते। अथवा स्वतन्त्रत्वाद् जीव एव प्रभुः, शरीरं हि परतन्त्रम्, मोक्षमार्गे वाऽनुपला(?पाल)यितव्ये प्रभुः। **दोषाः** क्रोधादयः। **निरे** इति पृष्ठतः कृत्वा। **ण विरुज्झेज्ज केणइ,** न विरुध्येत केनचिदिति, अपि पूर्वशत्रूणामपि, अपि हास्येनापि। विरोधो विग्रहः घन्त इत्यर्थः, यद् वा यस्य प्रतिकूलम्। **मणसा वयसा चेव** त्ति नवकेन भेदेन। **अन्तश** इति यावज्जीवितान्तः ॥ १२ ॥ उक्ता मूलगुणाः। उत्तरगुणप्रसिद्ध्ये त्वपदिश्यते—

**५०८. [7]संवुडे य महापण्णे [8]धीरे [9]दत्तेसणं चरे।**
**एसणासमिते णिच्चं वज्जयंते अणेसणं ॥ १३ ॥**

**५०८. संवुडे य महापण्णे०** सिलोगो। हिंसाद्याश्रवसंवृतः इंदिय-णोइंदियभावसवुडो वा। महती प्रज्ञा यस्य स भवति **महाप्रज्ञः**। धीर्बुद्धिरित्यनर्थान्तरम्। आहार-उवधि-सेज्जाओ याचितद्रव्यं एषणीयं च **चरति** गच्छति चर्य्यते इत्येकोऽर्थः। **एसणासमिते णिच्चं,** तिविधा एसणा—गवेसणा १ गहणेसणा २ घासेसणा ३। एवं सेसाओ वि समितीओ ॥ १३ ॥

तत्राऽऽधाकर्म सर्वगुरु, अनेषणादोषः आद्यश्चेति, तेन तन्निषेधार्थमपदिश्यते—

**५०९. [10]भूताणि समारंभ साधू उद्दिस्स जं कडं।**
**तारिसं तु ण गेण्हेज्जा [11]अण्ण-पाणं सुसंजते ॥ १४ ॥**

---

१ किंचणं ख २ ॥ २ एताव त वि° ख १ ख २ ॥ ३ उड्ढमहे ति° ख १। उड्ढं अहे य ति° खं २ पु १ पु २ ॥ ४ विरइयं ख २ ॥ ५ विज्जा ख १ ख २ पु १ पु २ वृ० दी० ॥ ६ णिराकिच्चा ख १ पु १ पु २ वृ० दी०। णिरिक्खेत्ता ख २ ॥ ७ संवुडे से म° ख २ पु १ पु २ वृ० दी०। संवुडेस म° ख १ ॥ ८ वीरे ख १ ख २ पु १ पु २ ॥ ९ दंतेसणं ख २ ॥ १० भूयाइं समारभ साहुमुद्दिस्स जं वृ० दी०। भूताइं समारंभ तमुद्दिस्सा य जं खं १। भूयाइं च समारंभ समुद्दिस्स य जं खं २ पु १ पु २ ॥ ११ अण्णं पाणं ख १ ख २ वृ० दी० ॥

५०९. भूताणि समारंभ० सिलोगो। भूतानि तस-थावराणि। कथमिति?, साधूनुद्दिश्योपकल्पितम्। तारिसं तु ण गेण्हेज्जा। एवं उवधि पि। इत्येवं भावमार्गः प्रतिपन्नो भवति ॥ १४ ॥ किञ्च—

**५१०. पूतिकम्मं ण सेवेज्ज एस धम्मे वुसीमतो।**
**जं किंचि अभिसंकेज्जा[1] सव्वसो तं ण भोत्तए ॥ १५ ॥**

५१०. पूतिकम्मं ण सेवेज्ज एस धम्मे० [सिलोगो]। वुसीमतो त्ति, वुसिमानिति संयमवान् वसिमं वा। किञ्च—जं किंचि० सिलोगो [उत्तरद्धं]। जं किंचि अभिसंकेज्जा सव्वसो तं ण भोत्तए, यदिति आहार-उवधि-सेज्जा, अधवा यदिति यत् किञ्चिद् दोषं अभिसंकते पणुवीसाए अण्णयर किमेतं एसणिज्जं अणेसणिज्जं?। सर्वश इति यद्यपि प्राणात्ययः स्यात् ॥ १५ ॥

इदाणिं वायासमिती[2]—

**५११. ठाणाइं संति सड्ढीणं गामेसु नगरेसु वा।**
**अत्थि[3] वा णत्थि वा धम्मो? अत्थि धम्मो त्ति णो वते ॥ १६ ॥**

५११. ठाणाइं० सिलोगो। ठाणाणि संति सड्ढीणं, श्रद्धावन्तः श्राद्धिनः। गामेसु नगरेसु वा जाव सण्णिवेसेसु वा। सम्मदिट्ठीणं मिच्छदिट्ठीण वा तेहिं सड्ढेहि पुव्विं णाम पुच्छितो परेणेति मिच्छादिट्ठिणा मरुयसड्ढेण तच्चणियादिसड्ढेण वा—'हे साधो! जं 'मिदे[4] अम्हे ब्राह्मण भिक्षुं वा तर्प्पयामः, अस्त्यत्र कश्चिद् धर्मः? तुमं च मग्गट्ठितो[5]'। एवं पुट्ठो अत्थि धम्मो त्ति णो वते ॥ १६ ॥

**५१२. अत्थि[6] वा णत्थि वा पुण्णं? अत्थि पुण्णं ति णो वए।**
**अधवा णत्थि पुण्णं ति, एवमेयं महब्भयं ॥ १७ ॥**

५१२. अत्थि वा० सिलोगो [पुव्वद्धं]। अधवा णत्थि पुण्णं ति० ॥ १७ ॥ स्याद्—अनुज्ञायां को दोषः? प्रतिषेधे वा?, उच्यते—

**५१३. दाणट्ठताए[7] जे सत्ता हम्मंति तस-थावरा।**
**तेसिं सारक्खणट्ठाए[8] अत्थि पुण्णं ति णो वदे ॥ १८ ॥**

५१३. दाणट्ठताए जे सत्ता हम्मंति तस-थावरा० [सिलोगो]। तं जधा—तणणिस्सिता कट्ठ-गोमयणिस्सिता संसेतया तसा थावरा य हम्मंते। तेसिं० सिलोगो [उत्तरद्धं]। तेसिं सारक्खणट्ठाए अत्थि पुण्णं ति णो वदे, मिच्छत्तथिरीकरणं, जं च तेणाऽऽहारेण परिवूढा करेस्सति असयम, अप्पाणं पर च वहूहि भावेंति तदनुज्ञातं भवति ॥ १८ ॥

पडिसेधे वि—

*** ५१४. जेसिं तं उपकप्पेंति अण्णं[10] पाणं तधाविधं।**
**तेसिं लाभंतरायं ति तम्हा णत्थि त्ति णो[9] वदे ॥ १९ ॥**

५१४. कण्ठ्यम् ॥ १९ ॥ तत्र का प्रतिपत्तिः? तुसिणीएहिं अच्छितव्वं, निव्वंधे वा ब्रवीति—अम्हं आधाकम्मादि[11]-वातालीसदोसपरिसुद्धो पिंडो पसत्थो। जं च पुच्छसि 'किमत्रास्ति पुण्यम्?' इत्यत्रास्माकमव्यापारः। कथम्?, उभयदोषोपपत्तेः। कथम्?—

१ अभिकंखेज्जा सव्वसो त ण कप्पते ख १ खं २ पु १ पु २ वृ० दी०। सव्वओ पु १ पु २ ॥ २ इयं गाथा मूलसूत्रादर्शेषु वृत्ति-दीपिकयोश्चेत्थरूपा वर्त्तते। तथा हि—हणंतं णाणुजाणेज्जा आयगुत्ते जिइंदिए। ठाणाइं संति सड्ढीणं गामेसु णगरेसु वा ॥ ३ परेण पुच्छितो धम्मं इत्यपि तृतीय चरण स्यात् ॥ ४ मृगा सरलाशया इत्यर्थ ॥ ५ °ट्ठितो मग्गचिट्ठ स० वा० मो० ॥ ६ तहा गिरं समारब्भ अत्थि पुण्ण ख १ ख २ पु १ पु २ वृ० दी० ॥ ७ °ट्ठयाय जे पाणा ह° ख १ ख २ पु १ पु २ वृ० दी० ॥ ८ संरक्ख पु १ ॥ ९ तम्हा अत्थि त्ति णो ख १ ख २ पु १ पु २ वृ० दी० ॥ १० अण्ण-पाणं ख १ ख २ वृ० दी० ॥ ११ °म्माधिवा° चूसप्र० ॥

* ५१५. जे य दाणं पसंसंति वधमिच्छंति पाणिणं ।
जे य णं पडिसेधेंति वित्तिच्छेदं करेंति ते ॥ २० ॥

५१५. महातटाकदृष्टान्तः—सर्वैः जलचरैः स्थलचरैश्च प्रतिवोधि(?), अनुज्ञायामननुज्ञायां चोभयथाऽपि दोषः ॥२०॥ अथवा "असत्येको मुच्यत्येको, द्वावेतौ नरकं गतौ ।" [ ] एवमुभयथाऽपि दोषं दृष्ट्वा—

५१६. दुहतो वि जे ण भासंति अत्थि वा णत्थि वा पुणो ।
आयं रयस्स हिच्चा णं णेव्वाणं पाउणंति ते ॥ २१ ॥

५१६. दुहओ० सिलोगो । दुहतो वि जे ण भासंति अत्थि [वा] णत्थि वा पुणो, ते भगवन्तः आयं रयस्स एतीत्यायस्तम्, रतङ त्ति रजः, रजसः आगमं हिच्चा [णं] णेव्वाणं पाउणंति ते इति । एवं वाक्समितिरुक्ता, तद्ग्रहणात् सेसा वि समितीओ घेप्पंति, एवं च णेव्वाणं भवतीति ॥ २१ ॥ भगवन्तश्च—

५१७. णेव्वाणपरमा बुद्धा णक्खत्ताण व चंदमा ।
तम्हा सदा जते दंते णेव्वाणं संधए मुणी ॥ २२ ॥

५१७. णेव्वाणपरमा बुद्धा० सिलोगो । णेव्वाणं परम जेसि ते इमे णेव्वाणपरमा एते बुद्धा अरहन्तः, तच्छिष्या बुद्धवोधिताः, परम निर्वाणमित्यतोऽनन्यतुल्यम्, नास्य सांसारिकानि तानि तानि वेदनाप्रतीकाराणि निर्वाणानि अनन्तभागेऽपि तिष्ठन्तीति । दृष्टान्तः सौत्र एव—नक्खत्ताण व चंदमा, न क्षयं यान्तीति नक्षत्राणि, तेभ्यः कान्त्या सौम्यत्वेन प्रमाणेन प्रकाशेन च परमश्चन्द्रमाः नक्षत्र-ग्रह-तारकाभ्यः, एवं ससारसुखेभ्योऽधिकं निर्वाणसुखमिति । तम्हा सदा जते दंते, मोक्षमग्गपडिवण्णे उत्तरगुणेहिं वड्ढमाणेहिं अच्छिण्णसंधणाए णेव्वाणं संधेज्जा ॥ २२ ॥ स एवमच्छिन्नसन्धनया निर्वाणं संधमाणः उभयत्रापि—

५१८. वुज्झमाणाण पाणाणं किंचंताण सकम्मुणा ।
अक्खाति साधुतं दीवं पतिट्ठेसा पवुच्चती ॥ २३ ॥

५१८. वुज्झमाणाण पाणाणं० सिलोगो । संसारनदीस्रोतोभिरुह्यमानानां स्वकर्मोदयेन यत् तच्छुभं तीर्थकरत्वनाम तस्य कर्मण उदयात् अक्खाति साधुतं दीवं आख्याति भगवानेव, शोभनमाख्याति साधुराख्यातम् । एतावता वा समणे वा माहणे वा जा वत्थछु(?वच्छछु)त्तरीए दीपयतीति दीपः, द्विधा पिवति वा द्वीपः, स तु आश्वासे प्रकाशे च, इहाऽऽश्वासद्वीपोऽधिकृतः । यस्मादाह—उह्यमानानां श्रोतसा सो दीवतो ताणं सरणं गती पतिट्ठा य भवति, एतदाश्वासद्वीपं प्राप्य संसारिणां प्रतिष्ठा भवति, इतरथा हि ससारसागरे जन्म-मृत्युजलोर्मिभिरुह्यमाना नैव प्रतिष्ठां लभन्ते । जं च मग्गं अणुपालेतस्स अट्ठविधं कम्मं प्रतिष्ठां गच्छति, निष्ठामित्यर्थ, यथाऽऽख्याति तथाऽनुचरति सय, अणिग्गहितवालविरतो जेण जीवो हिंडंतो प्रतिष्ठां लभते, एप प्रशस्तभावमार्ग इति लभ्यते ॥ २३ ॥

केरिसो पुण पसत्थभावमग्गगामी प्रतिष्ठां लभते ? कीदृशो वा भावाश्वासदीपो भवति ?—

५१९. आयगुत्ते सदादंते छिन्नस्सोते णिरासवे ।
जे धम्मं सुद्धमक्खाति पडिपुण्णमणेलिसं ॥ २४ ॥

५१९. आयगुत्ते सदादंते० सिलोगो । आत्मनि आत्मसु वा गुप्त आत्मगुप्तः, इन्द्रिय-नोइन्द्रियगुप्त इत्यर्थः, न तु यस्य गृहादीनि गुप्तादीनि । हिंसादीनि श्रोतांसि छिन्नानि यस्य स भवति छिन्नस्सोते, छिन्नश्रोतस्त्वादेव निराश्रवः । जे धम्मं सुद्धमक्खाति, य एवंविधे आश्वासद्वीपे स्थितः प्रकाशद्वीपः अन्येषां धर्ममुपदिशति, प्रतिपूर्णमिदं सर्वसत्त्वानां हितं

१ °च्छेतं ख १ ॥ २ ते ख १ ख २ पु १ पु २ वृ० दी ॥ ३ अयरस्सा एतीत्यायस्तं रत इति रजतं रजसः चूसप्र० ॥
४ नेव्वाणं परमं बुद्धा नक्खत्ताण व चंदिमा ख १ ख २ पु १ पु २ ॥ ५ कच्चंताण सकम्मणा । आधाति ख १ खं २ पु १ पु २ ॥
६ अनिगृहीतबालवीर्य ॥ ७ अणासवे ख २ पु १ पु २ । अणासते ख १ ॥ ८ सुहम° खं १ ॥ ९ °नि आहिसि छि° चूसप्र० ॥

सुहं सर्वाविशेष्यं निरुपधं निर्वाहिकं मोक्षं नैयायिकम् इत्यतः प्रतिपूर्णम्, अथवा सर्वैर्दया-दम-ध्यानादिभिर्धर्मकारणैः प्रतिपूर्णमिति । अनन्यतुल्यं अणेलिसं, योऽयमनन्यसदृशो धर्मोपदेशः ॥ २४ ॥

**५२०. तमेव अविजाणंता अबुद्धा बुद्धवादिणो ।**
**बुद्धा मो त्ति य मन्नंता दूरतो ते समाधिए ॥ २५ ॥**

**५२०. तमेव अविजाणंता०** सिलोगो । तमिति तद् द्विविधं प्रदीपभूतं धर्मं न बुद्धा अबुद्धाः बुद्धवादिनश्च बुद्धम्मन्याश्चाऽऽत्मान बुद्धा मो त्ति य मन्नंता अण्णाणिणो अविरया तिण्णि तेसट्ठा पावातियसता 'एवमस्माकं मोक्षसमाधिर्भविष्यति' इति दूरतस्ते समाधिए। कथम्? इहलोकेऽपि तावं तेऽनेकाग्रत्वात् समाधिं न लभन्ते कुतस्तर्हि परमसमाधि मोक्षम्? । तद्यथा—शाक्याः अबुद्धा बुद्धवादिनः सुखेन सुखमिच्छन्ति, इहलोकेऽपि तावद् ग्रामव्यापारैर्न सुखमास्वादयन्ति, कुतस्तर्हि परमसमाधिसुखमिति? । उक्तं हि—"तत्रैकाग्रं कुतो ध्यानं, यत्राऽऽरम्भ-परिग्रहः? ।" [ ] इति । अतस्ते चतुव्विधाए भावणाए दूरतः ॥ २५ ॥ इतश्च दूरतः—

**५२१. ते य वीयोदगं चेव तमुद्दिस्सा य जं कडं ।**
**झाणं णाम झियायंति अखेतण्णा असमाहिता ॥ २६ ॥**

**५२१. ते य वीयोदगं चेव०** सिलोगो । वीयाणि सचेतणाणि शाल्यादीनाम्, श्रु(? शी)तमपि च उदकं सचेतनमेव, हरिद्रा-कर्कोदकवत्, तमुद्दिश्य च कृतं उपासकादिभिः, स्वयं च पाचयन्ति पक्षचारिकादयः, तेषां हि पक्षे चारिका भवन्ति, अनुजानते च सुपक्कं सुमृष्टमिति, जीवेषु च अजीवबुद्धयः अतत्त्वे तत्त्वबुद्धयः वराकास्तत्कारिणस्तद्वेषिणश्च सङ्घभक्तानि गणयन्तोऽतीता-ऽनागतानि च प्रार्थयन्तः झाणं णाम झियायंति, णाम परोक्षस्तवादिषु, तेऽपि नाम यदि ध्यानं ध्यायन्ति, को हि नाम न ध्यानं ध्यास्यति? ।

ग्राम-क्षेत्र-गृहादीना गवा प्रेष्यजनस्य च । यत्र प्रतिग्रहो दृष्टो ध्यानं तत्र कुतः शुभम्? ॥ १ ॥

[ ] इति ।

सचित्तकम्मा य तेसिं आवसथा विहारकुडीउ त्ति, मांसं कल्पिक इत्यपदिश्यते, दासीओ कप्पयारीउ त्ति । यथा बर्बरेण मांसस्य प्रत्याख्याय अशक्नुवता तमनुपालयितुं भमरमिति संज्ञां कृत्वा भक्षितम्, किमसौ तद् भक्षयन् निर्विशिको भवति?, लूता वा शीतलिकाभिधानेनाभिलप्यमाना किं न मारयति? । एव तेषां न सञ्ज्ञान्तरपरिकल्पितास्ते आरम्भा निर्वाणाय भवन्ति, न च वैराग्यकरा भवन्ति । येऽपि तावद् भिक्षाहारा भवन्ति तेऽपि सविकारस्त्रीरूपसचित्रकर्म्मसु लेनेषु वसन्ति तेषामपि तावत् कुतो ध्यानम्?, किमङ्ग पुनः कल्पिकारीर्व्यापारयताम्?, पचन-पाचनाप्रवृत्तानां तनुमेव चानुप्रेक्षमाणानां कुतो ध्यानम्? । ते हि मोक्षमार्गस्य ध्यानस्य च शुद्धस्य अखेतण्णा अजाणगा, असमाहिता णाम असंवृताः, मनोज्ञेपु पान-भोजना-ऽऽच्छादनादिपु नित्याध्यवसिताः 'कोऽत्थ संघभत्तं करेज्जा? कोऽत्थ परिक्खारं देज्ज वत्थाणि?' इत्येवं नित्यमेवार्त्तं ध्यायन्ति ॥ २६ ॥

**५२२. जधा ढंका य कंका य पिलजा मग्गुका सिही ।**
**मच्छेसणं झियायंति झाणं ते कलुसाधमं ॥ २७ ॥**

**५२२. जहा ढंका०** सिलोगो । जधा ढंका य कंका य पिलजा जलचरपक्षिजातिरेव, मग्गुकाः काकमङ्गवत्,

१ बुद्धमाणिणो खं १ ख २ पु १ पु २ वृ० दी० ॥ २ अतए ते समाहिते खं १ ख २ पु १ पु २ वृ० दी० ॥ ३ प्रावादुकशतानि ॥ ४ तावद् अने° स० वा० मो० ॥ ५ भोच्चा झाणं झि° ख १ ख २ पु १ पु २ वृ० दी० ॥ ६ °ण्णाऽस° ख १ पु १ पु २ ॥ ७ यतिप्रति° वा० मो० ॥ ८ "मास कल्किकमित्युपदिश्य सञ्ज्ञान्तरसमाश्रयणान्निर्दोष मन्यन्ते ।" इति वृत्तिकृत् ॥ ९ °सु लयनेपु पु० ॥ १० य कुलला मंडका सिही ख १ पु २ । य कुलला मद्दुका सिही ख २ । य कुलला मग्गुका सिही पु १ ॥

शिखी च जलचरा एव, एते हि न तृणाहाराः केवलोदकाहारा वा, ते नित्यकालमेव **मच्छेसणं झियायंति,** निश्चलास्तिष्ठन्ति जलमज्झे उदगमक्खोभेन्ता, मा भून्मत्स्यादयो नङ्क्ष्यन्ति[1] उत्तसिष्यन्ति वा ॥ २७ ॥

**५२३. एवं तु समणा एगे[2] मिच्छद्दिट्ठी अणारिया ।**
**विसेएसणं[3] झियायन्ति कंका वा कलुसाधमा ॥ २८ ॥**

**५२३. एवं तु समणा एगे०** सिलोगो । **एवं** पि नाम **श्रमणा** वयं इति ब्रुवन्तः **एके** न सर्वे पचनादिषु आरम्भेषु अशुभाध्यवसाने च वर्त्तमाना **मिथ्यादृष्टयः** चरित्तणाअरिया आहार-परमपूजा-सत्कारांश्च ध्यायन्ति, सन्मार्गाजानकाः कुमार्गाश्रिताः मोक्षमिच्छन्तोऽपि संसारसागर एव निमज्जंते ॥ २८ ॥[4] दृष्टान्तः—

**५२४. जधा आसाविणी[5] णावं जातिअंधो दुरूहिया ।**
**इच्छेज्जा[6] पारमागन्तुं अंतरा य विसीदंति[7] ॥ २९ ॥**

**५२४. जधा आसाविणी णावं०** सिलोगो । आस्रवतीति **आस्राविनी** सदाश्रवा शतच्छिद्रा । नयति नीयते वा नौः । जातित एव अन्धो **जात्यन्धः** पूर्वा-ऽपर-दक्षिणोत्तराणां दिशां मार्गाणां गत-गन्तव्यस्थानभिज्ञः एतावद् गतं एतावद् गन्तव्यम् । **इच्छेज्जा पारमागन्तुं** अन्तरा एव नदीमुखे पर्वते वा प्रतिहतभग्ने निमग्ने वा पोते **अंतरा** इति अप्राप्त एव पारं **विसीदति** ॥ २९ ॥ एष दृष्टान्तः । अयमर्थोपनयः—

**५२५. एवं तु समणा एगे मिच्छद्दिट्ठी अणारिया ।**
**सोतं कसिणमावण्णा आगंतारो महब्भयं ॥ ३० ॥**

**५२५. एवं तु समणा एगे०** सिलोगो । **एगे** ण सव्वे, अण्णाण-मिच्छत्ततमपडल-मोहजालपडिच्छन्ना । **अणारिया** णाम अणारियचरित्ता । **सोतं कसिणमावण्णा,** श्रवतीति श्रोतः, आस्राविनीनौस्थानीयं कुचरितश्रोतमास्थाय **कसिणमिति** सम्पूर्णं आश्रवद्वारम्, तं तु मिथ्यादर्शनसहगतौ हि राग-द्वेषौ सम्पूर्णकर्मस्रोतो भवति, तदभावे तु शेषा आश्रवा यद्यपि भवन्ति तथापि न सर्वा उत्तरप्रकृतयो वध्यन्ते, न चासम्पूर्णाः । यस्मादुक्तम्—"सम्मद्दिट्ठी जीवो०"[8] [ वंदित्तु० गा० ३५ ] । अथवा कसिणद्रव्यश्रोतः प्रावृषि वर्षासु वा नदीपूरः, एवं मिच्छत्तसहगता जोगा कसाया वा संपुण्णभावसोतं भवति । त-एवं सोतमावण्णा **आगंतारो महब्भयं,** **महब्भयमिति** ससार एव जाति-जरा-मरणवहुलो । तं जधा—गब्भतो गब्भं जम्मतो जम्मं मारयो मारं दुक्खतो दुक्खं, एवं भवसहस्साइं पर्यटन्ति वहून्यपि ॥ ३० ॥

एत्थ चेव पसत्थभावमग्गे वण्णिज्जमाणे पुव्वं वुत्तं—"**जं किंचि अभिसंकिज्जा सव्वसो तं ण भोत्तए**" [ सूत्र ५१० ] एस उस्सग्गमग्गो इत्यादि अतिप्रसक्त लक्षणं निवार्यते, सर्वस्योत्सर्गस्यापवादः, यथा चोत्सर्गः **काश्यपेन** प्रणीतः [तथाऽपवादः] इत्यतोऽपवादसूत्रं प्रारभ्यते । प्रत्ययश्च शिष्याणां भविष्यति—यथाऽस्त्यपवादोऽपीति, तेन तमाचरन्तो नामाऽऽचारवन्तमात्मानं मस्यन्ते । तच्च शास्त्रमेव न भवति यत्रोत्सर्गा-ऽपवादौ न स्तः, तेनापदिश्यते—

**५२६. इमं[9] च धम्ममादाय कासवेण पवेदितं ।**
**कुज्जा भिक्खू गिलाणस्स अगिलाए समाहिए ॥ ३१ ॥**

---

१ °दयो मङ्क्ष्यन्ति पु० ॥ २ वेगे पु १ ॥ ३ °सतेस° ख २ पु १ ॥ ४ अष्टाविंश-एकोनत्रिंशसूत्रश्लोकयोरन्तराले—

**सुद्धं मग्ग विराहेत्ता इहमेगे उ दुम्मती । उम्मग्गगता दुक्खं घंतमेसंति तं तधा ॥**

इत्यय सूत्रश्लोक प्राचीना-ऽर्वाचीनतालपत्र-कद्गलोपरिलिखितसूत्रप्रतिपु वर्त्तते, **वृत्ति-दीपिका**कृद्भ्यामप्यय सूत्रश्लोको व्याख्यातोऽस्ति, किन्तु **चूर्णिकृता** भगवता व्याख्यातो नास्ति । **घातमेसंति तं तहा** पु १ ॥ ५ °**विणिं णावं जातिअधे** ख १ खं २ पु १ पु २ ॥ ६ **इच्छती** ख १ ख २ वृ० दी० ॥ ७ °**सीयती** ख १ ख २ पु १ । °**सीयई** पु २ ॥ ८ "सम्मद्दिट्ठी जीवो जइ वि हु पाव समायरे किंचि । अप्पो सि होइ वधो जेण ण णिद्धधस कुणइ ॥" इति पूर्णा गाथा ॥ ९ प्राचीना ऽर्वाचीनेपु सूत्रादर्शेपु **वृत्ति-दीपिकयो**श्च व्याख्याने एकत्रिंग-द्वात्रिंशसूत्र-श्लोकयुगलस्थाने—

**इमं च धम्ममादाय कासवेण पवेदितं । तरे सोयं महाघोरं अत्तत्ताए परिव्वए ॥**

इतिरूप एक एव सूत्रश्लोकस्तद्व्याख्या च दृश्यते, तथा वृत्ति-दीपिकयो **कुज्जा भिक्खू गिलाणस्स अगिलाए समाहिए** इत्युत्तरार्धस्य पाठभेदो निर्दिष्टो वर्तते ॥

**५२७. संखाय पेसलं धम्मं दिट्ठिमं परिणिव्वुडे।**
**तरे सोतं महाघोरं अत्तत्ताए परिव्वएज्जासि ॥ ३२ ॥**

५२६. इमं च धम्ममादाय० सिलोगो। धर्ममादाय धर्मं च फलम्। तीर्थकरः काश्यपः। स एव भगवान् किं प्रवेदितवान्? कुज्जा भिक्खू गिलाणस्स पूर्ववत् ॥ ३१ ॥ किञ्च—

५२७. संखाय पेसलं धम्मं० [सिलोगो]। संख्यायेति ज्ञात्वा। पेसलं इति सम्पूर्णम्। द्रव्यपेसल यद्धि मेद-5 दन्तुरं मांसम्, भावपेशलस्तु ज्ञान-व्यादिभिः सर्वैर्धर्मकारणैः सम्पूर्णो धर्म एव। तं ज्ञात्वा दृष्टिमानिति सम्यग्दृष्टिः। सङ्ख्याग्रहणाद् [ज्ञानम्,] धर्मग्रहणाच्चारित्रम्, दृष्टिग्रहणात् सम्यग्दर्शनम्, एव त्रीण्यपि सम्यग्दर्शन-ज्ञान-चारित्राणि गृहीतानि भवन्ति। तरे सोतं महाघोरं, मार्गं एवानुवर्त्तते, तराहि सोतं महाघोरं, श्रवतीति स्रोतः, द्रव्ये भावे च, जाति-जरा-मरणा-ऽप्रियसंवासादिभिर्महाघोरं भावश्रोतः संसारः। अत्तत्ताए त्ति अत्ताणं तारेंतो परिव्वएज्जासि ॥ ३२ ॥ तमेवं तरति—

**५२८. विरते गामधम्मेहिं जे केई जगती जगा।** 10
**[1]तेसिं अत्तुवमाणेण थामं कुव्वं परिव्वए ॥ ३३ ॥**

५२८. विरते गामधम्मेहिं० सिलोगो। ग्रामधर्माः शब्दादयः। जे केई जगती जग त्ति जायत इति जगत् तस्मि जगति विद्यन्ते ये, जायन्त इति वा जगाः जन्तवः, तेसिं अत्तुवमाणेण तेषां आत्मोपमानेन आत्मौपम्येन, कोऽर्थः? "जध मम ण पियं दुक्खं०"। पठ्यते च—"तेसिं ता उवमाऽऽताए" आताए त्ति आत्मोपमं गृहीत्वा ज्ञात्वेत्यर्थः, "जह मम ण पियं दुक्खं०"। थामं कुव्वं परिव्वए त्ति सयमवीरियं कुव्व ॥ ३३ ॥ 15

तं तु एवं संयमवीरियं भवति—

**५२९. अतिमाणं च मायं च तं परिण्णाय पंडिते।**
**सव्वमेतं णिरे [2]किच्चा णेव्वाणं संधए मुणी ॥ ३४ ॥**

५२९. अतिमाणं च० सिलोगो। अधवा सयमवीरियस्स इमे विग्घकरा भवति। तं जधा—अतिकोधो अतिमाणो अतिमाया अतिलोभो इति, अतः तं अतिमाणं च मायं च, अतिक्राम्यते येन चारित्रं सोऽतिमाणं, अप्रशस्त इत्यर्थः, 20 प्रशस्तोऽपि न कार्यः, किन्तु तत् क्रियार्थमेव क्रियते, रजक-कूपखातकदृष्टान्तसामर्थ्यात्। यथा—रजको मलदिग्धानि वस्त्राणि प्रक्षालयन् शुद्ध्यर्थमन्यदपि मलं औपधादिकं समादत्ते एवं साधुरपि। कूपेऽप्येवम्। न च नामावीतरागस्य मानादयो नोत्पद्यन्ते, ते त्वप्रशस्ता नरेण न कार्याः, एवं शेषा अपीति। दुविधाए परिण्णाए परिजाणाहि। किञ्च—ये केचित् क्रोध-मान-माया-लोभाद्याः दो[षाः] जाव मिच्छादंसण त्ति इत्येवमाद्यन्यदपि दोषजातं सव्वमेतं निरे किच्चा, सव्वं निरवसेसं एतदिति यदुद्दिष्टम्, निरमिति पृष्ठम्, णेव्वाणं अच्छिण्णसधणाए सन्धए ॥ ३४ ॥ किञ्च— 25

**५३०. [3]संधए साधुधम्मं च [4]पावधम्मं णिरे [5]करे।**
**उवधाणवीरिए भिक्खू कोधं [6]माणं ण पत्थये ॥ ३५ ॥**

५३०. संधए साधुधम्मं च० सिलोगो। दसविधो चरित्तधम्मो णाण-दंसण-चरित्ताणि वा तं अच्छिन्नसंधणाए, णाणे अपुव्वगहणं पुव्वाधीतं च गुणाति, दंसणे णिस्सकितादि, चरित्ते अखंडितमूलगुणो। पठ्यते च—"सद्दहे साधुधम्मं च"। पावधम्मो अण्णाण-अविरति-मिच्छत्ताणि, अधवा पावाणं धम्मो, पापा मिथ्यादृष्टयः सर्वे गृहिणोऽन्यतीर्थिकाश्च, तेसिं 30 धम्मं सभावं, निरे कुर्यादिति पृष्ठतः कुर्यात्। तत् केन कुर्यात्? को वा कुर्यात्? इति उच्यते, उवधाणवीरिए भिक्खू, उपधानवीर्यं नाम तपोवीर्यम्, स उपधानवीर्यवान् भिक्खू। कोधं माणं ण पत्थये, न कुध्येत न मायेत, न क्रोधमिच्छेदित्यर्थः, अक्रोधं तु प्रार्थयेत्, एवं शेषेष्वपि ॥ ३५ ॥

---

१ तेसिं अत्तुवमायाए थामं ख १ खं २ पु १ वृ० दी०। तेसिं अप्पोवमायाए थाम पु। २ तेसिं ता उवमाऽऽताए चूपा० ॥ २ णिराकिच्चा खं १ ख २ पु १ पु २ वृ० दी० ॥ ३ संधत्ते साधुं ख २। सद्दहे साधुं चूपा० वृपा० ॥ ४ पावकम्मं ख २। पावं धम्मं ख १ वृ० दी० ॥ ५ णिराकरे खं १ ख २ पु १ पु २ वृ० दी० ॥ ६ माणं च वज्जते ख १ ख २ पु १ पु २ ॥

स्यात्—किमेवं वर्द्धमानस्वामी एतन्मार्गमुपदिष्टवान्? उतान्येऽपि तीर्थकराः?, उच्यते—

> ५३१. जे य बुद्धा अतिक्कंता जे य बुद्धा अणागता ।
> संति तेसिं पतिट्ठाणं भूयाणं जगई जहा ॥ ३६ ॥

५३१. जे य बुद्धा अतिक्कंता० सिलोगो । अतिक्कंता अतीतद्धाए अणंता एतन्मार्गमुपदिश्य ते आचार्या वा मोक्षमिताः, साम्प्रतं पञ्चदशसु कर्मभूमीषु भाव्येयाः, अणागतद्धाए जे य बुद्धा अणागता । संति तेसिं पतिट्ठाणं गमनं शान्तिश्चारित्रमार्ग इत्यर्थः, एषा शान्तिः तेषां प्रतिष्ठानं आधारः आश्रय इत्यर्थः । प्रतिष्ठानं प्रतिष्ठा निर्वाणं वा शान्तिः । तेषां प्रतिष्ठाने को दृष्टान्तः—भूयाणं जगई जहा, जगती नाम पृथिवी, यथा सर्वेषां स्थावर-जङ्गमानां जगती प्रतिष्ठानं तथा सर्वतीर्थकराणामपि एष एव शान्तिमार्गः प्रतिष्ठानम् ॥ ३६ ॥

> ५३२. अह णं वतमावण्णं फासा उच्चावया फुसे ।
> ण तेहिं विणिहम्मेज्जा वातेण व महागिरी ॥ ३७ ॥

५३२. अह णं वतमावण्णं० सिलोगो । अथ पुनस्तं व्रतानि आपण्णं चारित्रमार्गप्रपन्नमित्यर्थः । पठ्यते [ च ]—"अधेणं भेदमावण्णं" भावभेदो हि संयम एव, कर्म्माणि भिनत्तीति भेदः । फासा सीत-उसिण-दंसमसगादयः उच्चावचा अनेकप्रकाराः परीषहोपसर्गाः स्पृशेत । ण तेहिं विणिहम्मेज्जा, ण तेहि उदिण्णेहि वि णाण-दंसण-चरित्तसंजुत्ताओ मग्गाओ विणिहण्णेज्जा, [ आणु ]पुव्वीए जिणंतो सयमवीरियं उप्पादेज्जासि त्ति, जधा ते गुरुगा वि उदिण्णा लहुगा भवंति ।

दृष्टान्तः आभीरयुवतिः—जातमेत्तं वच्छगं दुण्णि वेलाए उक्खिविऊण णिक्खामेति, पीतं चैनं पुनः प्रवेशयति । तमेव क्रमशो वर्द्धमानं अहरहर्जेयं कुर्वती जाव चउहायणं पि उक्खिवेति । एष दृष्टान्तः । अयमर्थोपनयः—एवं साधुरपि सन्मार्गात् क्रमशो जयाद् उदीर्णैरपि परीषहैर्न विहन्येत । वातेण व महागिरिरिति मन्दरः ॥ ३७ ॥

> ५३३. संवुडे से महापण्णे बुद्धे दत्तेसणं चरे ।
> णिव्वुडे कालमाकंखी एवं केवलिणो मतं ॥ ३८ ॥ ति बेमि ॥

**॥ मग्गो सम्मत्तो एक्कारसमज्झयणं ॥ ११ ॥**

५३३. संवुडे से महापण्णे० सिलोगो । स एवं संवरसंवृतः [महापण्णे] प्रधानप्रज्ञः विस्तीर्णप्रज्ञो वा । दधाति बुद्ध्यादीन् गुणानिति बुद्धः । पाठान्तरम्—"वीरे" । दत्तं एसणं चरेज्जासि त्ति दत्तेसणं चरे, अथवा दत्तमेषणीयं च यश्चरति स भवति दत्तैषणचरः । णिव्वुडे कालमाकंखी, शान्तः समितो णिव्वुडः, शीतीभूत इत्यर्थः । कालं काङ्क्षतीति कालकंखी, मरणकालमित्यर्थः । कोऽर्थः? तावदनेन सन्मार्गेण अविश्रामं गन्तव्यं यावन्मरणकालः । एवं केवलिणो मतं ति, जं तुमे अज्जजंबू! पुच्छितं "कतरे णं मग्गे" [ सूत्रं ४९६ ] तदेतदस्य केवलिनो मार्गाभिधानं कथितमनन्तरमाख्यातमिति ॥ ३८ ॥

**॥ इति मार्गाध्ययनम् ॥ ११ ॥**

---

१ किमेनं वर्द्ध° चूसप्र० ॥ २ संति त्ति संति पति° स० वा० मो० । संत त्ति संत पति° पु० ॥ ३ अधेणं भेदमावण्णं चूपा० ॥ ४ ण तेसु विणिहण्णेज्जा ख १ ख २ पु १ पु २ ॥ ५ वातेणेव खं १ ख २ पु २ ॥ ६ धीरे दत्ते° ख १ ख २ पु १ पु २ वृ० दी० । वीरे दत्तेसणचरे चूपा० ॥ ७ एयं वृ० दी० ॥

# १२

## [ बारसमं समोसरणज्झयणं ]

समोसरणं ति अज्झयणस्स चत्तारि अणुओगद्दारा। अधियारो किरियावादिमादीहिं चतुहिं समोसरणेहिं। णामणिप्फण्णे णिक्खेवो गाधा—

> समोसरणम्मि वि छक्कं सच्चित्ता-ऽचित्त-मीसगं दव्वे।
> खेत्तम्मि जम्मि खेत्ते काले जं जम्मि कालम्मि ॥ १ ॥ १०९ ॥ 5

समोसरणम्मि वि छक्कं० गाधा। वइरित्तं दव्वसमोसरणं सम्यक् समस्तं वा अवसरणं समवसरणम्। तं तिविधं—सचित्तं दुपदादि०। यत्रैकत्र बह्वो द्विपदाद्या बहवो मनुष्याः समवसरन्ति तं सचित्तं दव्वसमोसरणं। दुपदसमोसरणं जधा माधुसमोसरणं १ चतुप्पदानां निवाणादिसु गवादीना समोसरणं २ अपदानां नास्ति स्वयं समोसरणम्, गत्यभावात्, सहजानां वा स्वयमपि भवति वृक्षादीना समोसरण ३। अचेतनानामभ्रादीनाम्। खेत्तसमोसरणं जम्मि खेत्ते समोसरन्ति द्रव्याणि, जधा साधुणो आणंदपुरे समोसरंति। कालसमोसरणं वैसाहे मासे जत्ताए समोसरंति, वासासु वा जत्थ समोसरंति। 10 तधा पक्खिणो दिवाचरा वनखण्डमामाद्य समवसरन्ति ॥ १ ॥ १०९ ॥

> भावसमोसरणं पुण णायव्वं छव्विहम्मि भावम्मि।
> अधवा किरिय अकिरिया अण्णाणी चेव वेणइया ॥ २ ॥ ११० ॥

भावसमोसरणं पुण० गाधा। तिण्णि तिसट्ठा पावादियसयाणि णिग्गंथे मोत्तूण मिच्छादिट्ठिणो त्ति काऊण उदइए भावे समोसरंति, इंदियादिं पडुच्च खओवसमिए भावे समोसरंति, जीवं प्रतीत्य अणादिपारिणामिए भावे समोसरंति, एतेसु 15 चेव तिसु भावेसु तेसिं सण्णिवातिओ भावो जोएतव्वो। सम्मद्दिट्ठी किरियावादी तु छसु वि भावेसु। उदईए भावे अण्णाण-मिच्छत्तवज्जासु अट्ठसु वि कम्म[प]गतीसु समोसरंति, एवं चरित्ताचरित्ती य जोएयव्वा। उवसमिए वि भावे समोसरंति, उवसामगं पडुच्च, उपशममङ्गीकृत्य यदुक्तं भवति, अस्मिन्नेव भङ्गद्वये भवन्ति। खयोवसमिए वि भावे समोसरंति, अट्ठारस-विधे खयोवसमिए भावे, तद्यथा—ज्ञाना-ऽज्ञान-दर्शन-दानलब्ध्यादयश्चतुः-त्रि-त्रि-पञ्चभेदाः सम्यक्त्व-चारित्र-संयमासंयमाश्च। णाणं चउव्विहं—मति-सुत-ओधि-मणपज्जवाणि। अण्णाणं तिविधं—मतिअण्णाणं सुतअण्णाण विभंगणाणं। ज्ञाना-ऽज्ञानमित्यत्रा- 20 ज्ञानमिति यदुक्तं तदेकभवार्पणानङ्गीकृत्य, यद्वा सामान्येन, केवलिनो वा विदन्ति। दरिसणं तिविधं—चक्खु-अचक्खु-अवधिदं-सणमिति। लब्धिः पञ्चविधा—दाण-लाभ-भोगोपभोग-वीरियलद्धी इति। सम्मत्तं चरित्तं सयमासंयम इत्येतेऽष्टादश क्षायोपशमिका भावा भवन्ति। णवविधे खाइगे भावे समोसरति, तद्यथा—ज्ञान-दर्शन-[दान-]लाभ-भोगोपभोग-वीर्याणि च। णाण केवलणाणं, दंसणं केवलदंसणं, दाण-लाभ-[भोगोप]भोग-वीर्यमित्येतानि सम्यक्त्व-चारित्रे च नव क्षायिका भावा भवन्ति। पारिणामिगे वि अणातियपारिणामिगे भावे समोसरंति। एवं सण्णिवातिगे वि सण्णिक्कासो कायव्वो—द्विकादिचारणिका। अधवा भावसमोसरणं 25 चतुव्विधं, तं जधा—किरियावादी १ अकिरियावादी २ अण्णाणियवादी ३ वेणइयवादी ४ ॥ २ ॥ ११० ॥

> अत्थि त्ति किरियवादी वयंति १ णत्थि त्ति अकिरियवादी य २।
> अण्णाणी अण्णाणं ३ विणइत्ता वेणइयवादी ४ ॥ ३ ॥ १११ ॥

अत्थि त्ति किरियवादी० गाधा। तत्थ किरियवादी अत्थि आयादि जाव सुचिण्णाणं कम्माणं सुचिण्णा फलवि-

१ समवसरणे वि छक्कं ख १। समवसरणम्मि छक्कं ग २ पु २॥ २ जम्मि जावद्दयं खं १॥ ३ णेयव्वं पु २॥

वागा तधा वि ते मिच्छादिट्ठी चेव जैनं शासनं अनवगाढा १। तद्विधर्मवादिनो **अकिरियावादिणो**, तं जधा—णत्थि आतादि जाव णो सुचिण्णाणं कम्माणं सुचिण्णा फलविवागा भवंति २। **अण्णाणीवादि** त्ति किं णाणेण पढितेण ? सीले उज्जमितव्वं, ज्ञानस्य हि अयमेव सारः, जं सीलसवर, सीलेन हि तपसा च स्वर्ग-मोक्षौ लभ्येते ३। **वेणइयवादिणो** भणंति—ण कस्स वि पासंडस्स गिहत्थस्स वा णिंदा कायव्वा, सव्वस्सेव विणीयविणयेण होतव्वं ४ ॥ ३ ॥ १११ ॥

5 **असियसयं किरियाणं अकिरियाणं[1] च होति चुलसीती ।**
**अण्णाणिय सत्तट्ठी वेणइयाणं च वत्तीसा[3] ॥ ४ ॥ ११२ ॥**

**असियसयं किरियाणं०** गाथा । तं जधा—

"णत्थि ण णिच्चो ण कुणइ कत ण वेदेइ णत्थि णेव्वाणं ।" [ सन्मति० का० ३ गा० ५४ ]

**सङ्ख्या वैशेषिका ईश्वरकारणादि अकिरियावादी** चउरासीति, **तच्चिणिगादि** क्षणभङ्गवादित्वात्तु **क्षणवादिनः**।
10 **अण्णाणियवादीण सत्तट्ठी, ते तु मृगचारिकाद्याः। वेणइयवादीणं बत्तीसा दाणाम-पाणामादि**प्रव्रज्यादि ॥ ४ ॥ ११२ ॥

**❀ तेसिं मताणुमतेणं पण्णवणा वण्णिता इहऽज्झयणे ।**
**सब्भावणिच्छयत्थं समोसरणमाहु तेणं ति[4] ॥ ५ ॥ ११३ ॥**

**तेषां** क्रिया-ज्ञानवादिनां यद् यस्य मतं यच्च यस्य न मतं तेषां समवायेन त्रीणि त्रिषष्टानि प्रावादुकशतानि भवन्ति । तद्यथा—

15 **आस्तिकमतमात्माद्या** नित्या-ऽनित्यात्मका नव हि सन्ति । काल-नियति-स्वभावेश्वरा-ऽऽत्मकृतितः स्व-परसंस्थाः १८० ॥१॥
[ ]

एवं असीतं किरियावादिसतं । एएसु पदेसु ण चिंतितं—

जीव अजीवा आसव बंधो पुण्णं तहेव पावं ति । संवर णिज्जर मोक्खो सब्भूतपदा णव हवंति ॥ १ ॥

इमो सो चारणोवाओ—अत्थि जीवः स्वतो नित्यः कालतः १ अत्थि जीवो सतो अणिच्चो कालतो २ अत्थि जीवो परतो निच्चो कालओ ३ अत्थि जीवो परतो अणिच्चो कालओ ण्कं, अत्थि जीवो सतो णिच्चो णियतितो १ एवं णियतितो ण्क,
20 स्वभावतो ण्क, [ ईश्वरतो ण्क ], आत्मतः ण्क, एते पंच चउक्का वीस २० । एवं अजीवादिसु वि वीसावीसामेत्ताओ, णव वीसाओ आसीतं किरियावादिसतं १८० भवति । इदाणिं **अकिरियावादी**—

काल-यदृच्छा-नियति-स्वभावेश्वरा-ऽऽत्मतश्चतुरशीतिः । **नास्तिकवादिगणमत** न सन्ति सप्त स्व-परसंस्थाः ८ ण्कं[5] ॥१॥
[ ]

इमेनोपायेन—णत्थि जीवो सतो कालओ १ णत्थि जीवो परतो कालतो २ एव यदृच्छाए वि दो २ णियतीए वि दो
25 २ इस्सरतो वि दो २ स्वभावतो वि दो २, [ आत्मतो वि दो २, ] सव्वे वि बारस, जीवादिसु सत्तसु गुणिता चतुरासीति भवंति ८४ । इदाणिं **अण्णाणिय०**—

**अज्ञानिकवादिमतं** नव जीवादीन् सदादिसप्तविधान् । भावोत्पत्तिः सदसद्-द्वैता-ऽवाच्यं च को वेत्ति ? ६७ ॥ १ ॥
[ ]

इमे दिट्ठिविधाणा—सन् जीवः को वेत्ति ? किं वा [तेण] णातेण ? १ असन् जीवः को वेत्ति ? किं वा तेण णातेण ?
30 २ सदसन् जीवः को वेत्ति ? किं वा तेण णातेण ? ३ अवचनीयो जीवः को वेत्ति ? किं वा तेण णातेण ? ण्क, एवं सद्वचनीयः ५ असदवचनीयः ६ सदसदवचनीयः जीवे वि ७, एव अजीवे वि ७ आश्रवे वि ७ वंधे वि ७ पुण्णे वि ७ पावे वि ७ संवरे वि ७ णिज्जराए वि ७ मोक्खे वि ७ । एवमेते सत्त णवगा तिसट्ठी ६३ इमेहिं संजुत्ता सत्तसट्ठी ६७

---

१ अकिरियवाईण होइ ख १ ॥ २ अण्णाणी सत्तट्ठिं पु २ ॥ ३ वत्तीसं खं १ ॥ ४ तु ख १ ख २ पु २ वृ० ॥
५ ८ ण्क चतुरशीतिरित्यर्थ ॥

हवंति, तं जधा—सती भावोत्पत्तिः को वेत्ति ? किं वा ताए णाताए ? १ असती भावोत्पत्तिः को वेत्ति ? किं वा ताए णाताए ? २ सदसती भावोत्पत्तिः को वेत्ति ? किं वा ताए णाताए ? ३ अवचनीया भावोत्पत्तिः को वेत्ति ? किं वा ताए णाताए ? ४। उक्ता अज्ञानिकाः। इदाणिं **वैनयिकाः**—

**वैनयिकमतं** विनयश्चेतो-वाक्-काय-दानतः कार्यः। सुर-नृपति-यति-ज्ञातृ-स्थविरा-ऽवम-मातृ-पितृषु सदा ॥ १ ॥

[                    ]   5

सुराणां विनयः कायव्वो, तं जधा—मणेणं १ वायाए २ काएणं ३ दाणेणं ४, एवं रायाणं ट्क जतीणं ट्क णातीणं ट्क थेराणं ट्क किवणाणं ट्क मातुः ट्क पितुः ट्क, एवमेते अट्ठ चउक्का वत्तीसं ३२। सव्वे वि मेलिया तिण्णि तिसट्ठा ३६३ पावादिगसता भवंति। एतेसिं भगवता गणधरेधि य सब्भावतो निश्चयार्थं इहाध्ययनेऽपदिश्यते, अत एवाध्ययनं **समवसरण**मित्यपदिश्यते ॥ ५ ॥ ११३ ॥ एते पुण तिण्णि तिसट्ठा पावादिगसता इमेसु दोसु ठाणेसु समोसराविज्जंति, तं जधा—सम्मावादे य मिच्छावादे य। तत्थ गाधा—   10

**सम्मद्दिट्ठी किरियावादी मिच्छा य सेसगा वाती।**
**चइऊण मिच्छवायं सेवह वायं इमं सच्चं ॥ ६ ॥ ११४ ॥**

**॥ समोसरणं सम्मत्तं ॥ १२ ॥**

**सम्मद्दिट्ठी किरियावादी०** गाधा। तत्र क्रियावादित्वेऽपि सति **सम्मद्दिट्ठिणो** चेव एगे सम्मावादी, **अवसेसा** चत्तारि वि समोसरणा **मिच्छावादिणो** अण्णाणी अवि त परस्परविरुद्धदृष्टयः, तेण मोत्तूण अकिरियावाद सर्वादं वादं लद्धूण 15 विरतिं च अप्पमादो कायव्वो जधा कुदंसणेहिं ण छलिज्जासि। तेण धम्मे भावसमाधीए भावमग्गे य घडितव्वमिति ॥ ६ ॥ ११४ ॥ णामणिप्फण्णो णिक्खेवो गतो। सुत्ताणुगमे सुत्तं। अभिसंबंधो अज्झयणं अज्झयणेण—तेण णिव्वुडेण पसत्थभावमग्गो आमरणंताए अणुवालेतव्वो, ससंग्गे अप्पा भावेतव्वो, कुमग्गासिता य जाणिउं पडिहणंतव्वा, अतो चत्तारि समोसरणाणि। अधवा णामणिप्फण्णे वुत्ता समोसरणा ते इमे त्ति—

**५३४. चत्तारि समोसरणाणिमाणि, पावादुया जाइं पुढो वदंति।**   20
**किरियं अकिरियं विणयं ति ततियं, अण्णाणमाहंसु चउत्थमेव ॥ १ ॥**

**५३४. चत्तारि समोसरणाणि०** सिलोगो (वृत्तम्)। **चत्तारि** त्ति संखा, पंचादिपडिसेधत्थं अंते चतुण्ह गमणं। समवसरति जेसु दरिसणाणि दिट्ठीओ वा ताणि **समोसरणाणि**। **इमानी**ति वक्ष्यमाणानि। प्रवदन्तीति **प्रावादिकाः**। पिधं पिधं वदंति **पुढो वदंति**। तं जधा—**किरियं [ अकिरियं ] विणयं [ ति ततियं ] अण्णाणमाहंसु चउत्थमेव**। तत्थ **किरियावादीणं** अत्थि जीवो, अत्थित्ते सति केसिंच सव्वगतो केसिच असव्वगतो, केसिंच मुत्तो केसिच अमुत्तो, केसिंच 25 अंगुट्ठप्पमाणमात्रः केसिच श्यामाकतन्दुलमात्रः, केसिंच हिययाधिट्ठाणो पदीवसिहोवमो, किरियावादी कम्मं कम्मफलं च अत्थि त्ति भणति १। **अकिरियावादीणं** कत्ता णत्थि फलं त्वस्ति, केसिच फलमवि णत्थि, ते तु जधा **पंचमहाभूतिया चतुब्भूतिया खंधमेत्तिया सुण्णवादिणो लोगायतिगा** इच्चादि **अकिरियावादिणो** २। **अण्णाणिया** भणति—जे किर णरए जाणंति ते चेव तत्थुववज्जंति, किं णाणेणं तवेण व ? त्ति, ते तु **मिगचारियादयो** अडवीए पुप्फ-फलभक्खिणो अच्चादि अण्णाणिया ३। **वेणइया तु आणाम-पाणामादीया** कुपासडा ४ ॥ १ ॥ तत्थ पुव्वं—   30

---

१ °ज्ञाति° वृत्तौ ॥ २ ट्क इति चतु सङ्ख्याज्ञापकोऽक्षराङ्क ॥ ३ गणधरैश्च ॥ ४ **सिद्धा य** ख १ ॥ ५ **जहिऊण** ख २ पु २ ॥ ६ **सम्मादिट्ठी वादी** वा० मो० ॥ ७ अपि च इत्यर्थ । **अविरतपर**° पु० स० वा० ॥ ८ **संवाद ल**° स० वा० मो० ॥ ९ **संसग्गो अप्पभावे**° चूसप्र० ॥ १० **जाई** ख २ ॥ ११ °**यं च अ**° पु १ ॥ १२ **विणइ त्ति** ख २ पु १ पु २ ॥ १३ अच्चादि अत्यागिन इत्यर्थ ॥

